वीरान् प्रति प्रतिपदं सुरसुन्दरीणां
युद्धं कचाकचि कुचाकुचि च प्रवृत्तम् ॥ २५

(विलोक्य सहासम्)

धुन्वानः पतितासिखण्ड मसकृत्कूटं करोटीमयं
बिभ्र न्मौलि मदभ्रसिन्धुरशिरस्सिंहासनस्थो हसन् ।
प्रेतः कोऽपि विडम्बयन् कुरुपतिं पार्थोऽय मेति ध्रुवं
क्व द्रोणः क्व कृपः क्व कर्ण इति विस्फूर्जन् समुद्गर्जति ॥ २६

रथी — (अन्यतोऽवलोक्य) इतस्ताव द्वहतु रथः । यत्रातिविस्रास्रधमनित क्रव्यादगण-परिवार मपवारयं स्सकल मुनिपरिवारः धर्मसंशयच्छेदाय शरतल्पशायिनं शान्तनव मुपतिष्ठते ।

सारथिः — (तथा कृत्वा विलोक्य सविस्मयम्)

तीक्ष्णैः कटाक्षविशिखै रपि सुन्दरीणा-
मक्षोभ्यमाणहृदयस्य दृढव्रतस्य ।
वीरश्रियोपगतया विषमास्त्रयुक्त-
केलीजुषः पर मभू दवकीर्णिताऽस्य ॥ २७

रथी — ([1]सविमर्शम्)

सर्वक्षत्रवधप्रतिश्रुतमनाग्भंगैकभीरुः पुरा
यो मातुः किल कण्ठनाल मलुना त्क्षत्रप्रसूते स्सुतः ।
तं कुण्ठारकुठार माशु कृतवान् य स्संयुगे भार्गवं
शेते शान्तनव स्स वीरशयने कालेन किं दुष्करम् ॥ २८

सारथिः — (स्वगतम्) साधु रे, पार्थ साधु साधु । कालमेव व्यपदिशसि नात्मानम् ।
(प्रकाशम्) (शिरः कम्पयन्)

पित्रर्थं त्यजत स्समुद्रवलयक्षोणीगतप्राभवं
भ्रात्रर्थं च समुज्झतः प्रणयिनीसम्भोगलीलारसम् ।
पौत्रार्थं जहत स्तथा प्रियतमा न्प्राणान् रणप्राङ्गणे
लोकोत्तीर्ण महो न किं गुणगणोऽस्य गाङ्गायनेः ॥ २९

---

1. सविस्मयम् (A),

(विचिन्त्य)

स्वोत्सङ्गतल्पशयनोचित मस्य गात्रं[1]
पुत्रस्य वीक्ष्य शरतल्पगतं द्युसिन्धुः ।
ग्रीष्मे यथा वहति नून मनूनतापं
शोकोष्णबाष्पसलिलव्यतिकीर्ण मर्णः ॥ ३०

रथी — योऽभ्यर्थित स्समरमूर्धनि जीवितं स्वं
योद्धा कथान्त मकरो द्विजयश्रियै नः ।
तस्मै नम. परहितव्रतदीक्षिताय
स्वच्छन्दलब्धनिधनाय पितामहाय ॥ ३१

सारथिः — (सविस्मयम्)
ईदृक्षमपि संप्रेक्ष्य भीष्मं भीष्मपराक्रमम् ।
पुनः प्रतोद मुत्सृज्य कर श्चक्राय धावति ॥ ३२

रथी — स्वस्त्रीणां वीरकामानां कामा न्विफलय न्नयम् ।
निर्धूतद्वैत मात्मानं मुमुक्षु रभिवीक्षते ॥ ३३

सारथिः — (रथ मन्यतो नयन्) अयं च भगदत्तगजेन सह युध्यमानस्य भीमसेनस्य बाहुबन्धप्रकर्षनिकष स्समराङ्गणोद्देशः । यत्र सुप्रतीकप्रतिमल्ल इत्यपूर्वेय मार्यस्य भीमसेनस्य कीर्तिपताका प्रभवति । पश्य,

उद्यद्गदापरिघपाटितकुम्भिकुम्भ-
मुक्तानि मौक्तिककुलानि समुद्वहन्ती ।
कीर्तिप्ररोहविषये पवनात्मजेन
बीजाकृतेव रणभूमि रियं चकास्ति ॥ ३४

अत्र हि,

बाणप्रविद्धदशनोत्कलितस्फुलिङ्ग-
विप्लुष्टवेष्टनपटप्रकटीकृतास्यः ।
यावद्रुषा द्रुत मभिद्रवति त्वयाऽसौ
ताव त्कृत श्शरनिकृत्तकरः करीन्द्रः ॥ ३५

रथी — नारायणास्त्र मथ मां प्रति तेन मुक्त
प्रत्यग्रही स्त्व मपि जीवितव ज्जजानः ।

---

1. गात्रमस्य (A).

तं निघ्नत स्तदनु बाणशतै रुदग्रै-
र्जातं चिराय मृतमारणदुर्यशो मे ॥ ३६

सारथिः — इयं च बाहुबलोद्दृप्तै स्संशप्तकै स्सह युध्यमानस्यासहायवीरस्य तव विक्रम वृत्तिविपञ्चिका रणमही । यत्रेयं,

सञ्चेयः कलशशतैः वसारसोऽयं
भर्ता मे स्वय मुदरम्भरिः क यातः ।
आघ्नाना मुहु रिति मस्तकं कराभ्यां
सापत्या रटति कुटुम्बिनी पिशाची ॥ ३७

ततश्च सबीभत्सम्,

क्षुधावेगग्रस्तं सरसपललं वीरवपुष-
स्तदन्तश्शल्याग्रक्षतवदनगर्ता विजहति ।
समन्ता द्वक्त्रान्तःप्रसृत मसकृत् स्वात्मरुधिरं
मुहुः पायं पायं नदति मुदिता जम्बुकवधूः ॥ ३८

अयं च लक्ष्मणप्रमुखनिखिलकुरुवीरकुमारकरिकलभकण्ठीरवस्य....(इ त्यर्धोक्ते एवाऽन्यतो दर्शयति)

रथी — (स्मृतिं मभिनीय)

हा वत्स हा भुवनवत्सल हाऽभिमन्यो
क्वासि क ते मुख मवेक्ष्य सुखी भवामि ।
अस्मिन् स्थिते मयि कथं कथयासहाय-
स्त्वं माऽन्तरेण क नु गच्छसि वीरलोकान् ॥ ३९

(इति मूर्छति)

सारथिः — (आश्वासयति)

रथी — (आश्वस्य)

किं त्वं न परितुष्टोऽसि भित्वाऽऽजौ राजमण्डलम् ।
य दभेत्सी रिदं वत्स तपनस्यापि मण्डलम् ॥ ४०

(युधिष्ठिर मुद्दिश्य)

रिपुशस्त्रदेवताभ्यः पशुमिव मे बाल मुपहृत्य ।
आर्य जयज्वरमोक्षः काङ्क्षित एव त्वया कष्टम् ॥ ४१

अथवा शान्तम्। अविमृश्य मया प्रलपितं शोकार्तेन।

सारथिः — हन्त हन्तृषु जीवत्सु रणे च समुपस्थिते।
पुरुषेण हतो बन्धु र्नानुशोच्यो यथा स्त्रिया ॥ ४२

रथी — मयि जीवति अभिमन्यो र्हन्तारोऽपि जीवन्ति। भव त्वं तावत्, सखे यदुनन्दन, रणमुखे रथं सस्थापय, याव दभिमन्युप्राण प्रयाणमौहूर्तिका नवलोकयामि।

सारथिः — (तथा करोति)

(नेपथ्ये)

दक्षस्येव मखं हरः कुरुबलं पार्थोऽयमेति द्रुतम्।

रथी — (श्रुत्वा) द्रोणस्य शिष्यं प्रति वात्सल्यम्।

(पुन र्नेपथ्ये)

धन्योऽहं रणतोषितस्मरहरो यन्मेऽद्य युद्धातिथिः।

रथी — (श्रुत्वा) उचित मिद मस्त्रवेदपारायणिकस्य अस्मत्सब्रह्मचारिणो द्रौणे र्वचनम्।

(पुन र्नेपथ्ये)

फल्गुत्वं यदि फल्गुनस्य भुजयो रावेदया म्यद्य ते

रथी — (श्रुत्वा) अहो सुयोधनावष्टम्भसंभावितं पौरुषाभिमानात्मनः तस्य महाक्ष्वेडिनः पुत्रकसम्मितस्य धानुष्कापशदस्य कर्णस्यौद्धत्यम्।

(पुन र्नेपथ्ये)

निर्वेदा त्सुतशोकजा द्युधि मृतिं मन्येऽद्य वाञ्छ त्ययम् ॥ ४३

रथी — युक्तोऽयं दुश्शलाजाने र्मरणारिष्टमतिविपर्यासः।

(नेपथ्ये)

जयद्रथान्वयव्यतिरेकाभ्यां सर्वथा ममैव जयलक्ष्मीः।

अहतेऽद्य जयद्रथेऽनलं
विजयोऽयं समयात् प्रवेक्ष्यति।
भुवि तस्य शिरोनिपातना-
न्निहते पुत्रवधा द्विनङ्क्ष्यति ॥ ४४

रथी — (श्रुत्वा) अहो मनस्समाधानकौशलचातुरीयं कुलघस्मरस्य कौरवापशदस्य।

सारथिः — इतोऽवलोकयत्वायुष्मान् । सकलवीरभटचक्रवर्ती कुरुपतिराज्यलक्ष्मीरक्षणसौविदल्लः पाञ्चालप्रतिमल्लो भारद्वाजः ।

क्षत्रश्रियं प्रकटय न्विषमास्त्रचिह्नां
ब्राह्मश्रियं च कलय न्मखवेदिलक्ष्याम् ।
यः क्रूरसौम्यहृदयो मथना त्पुरस्ता-
दन्तर्विषामृतयुतोऽब्धि रिवाविभाति ॥ ४५

अपि च,

न ह्याप त्कृचि दस्ति यस्य पिबतः प्रत्यर्थिसैन्यार्णवं
पाञ्चालोऽपि च येन विन्ध्यगरिमा दर्पोन्नतिं त्याजितः ।
य स्संदर्शयति प्रसाद मधिकं प्रायो जडाना मपि
प्राप्त स्सोऽय महो मुनिः कलशभू र्दिष्ट्याऽद्य दृष्टेः पदम् ॥ ४६

(पुन रन्यतो दर्शयन्) खुरपुटनटनारभटीप्रकटितसमरोत्कण्ठतुरङ्गनिरोधसावधानसारथिसनाथरथावस्थितः श्रितकेतुयष्ट्यवष्टम्भ स्सुभटगोष्ठीविनोद मनुभव न्नित एव सलील मवलोकयति क एष वीरः ?

रथी — (विभाव्य)

एष द्रौणि रवक्रविक्रमकथाविश्रामभूमि श्चिरा-
दस्त्राणा मधिदेवताकरमृते नान्याङ्गनासङ्गतः ।
आस्तीर्णेषु दिशामुखेषु समरे य श्चापमुक्तै श्शरैः
बाणध्वानवदुत्पतन्ति सुभटा भिन्नांशुमन्मण्डलाः ॥ ४७

सारथिः — अयं च निजयशोलीलाविलासभासुरचामरस्थगितगगनाभोगः तृणीकृतत्रिभुवनया दृशा निवेद्यमानसुभटाभिमानोऽस्माक मव्याजवैरी ।

क्षात्रं क्षत्रिय वन्निरस्य सकलं क्षेत्रे धरित्रीमये
यं सस्यं स्वमिवाखिलं द्विजगणं य स्सर्वतोऽवीवृतत् ।
प्राप्तास्त्र स्तत एव भार्गवमुनेः प्रद्योतनस्यात्मज-
स्स्वस्य भ्रातु रपि प्रचण्डचरित स्संग्रामरङ्गे द्विषाम् ॥ ४८

इतश्च दक्षिणेन —

दोधूयमानहरिवालधिलाञ्छनश्रीः
शश्व द्गुणार्जनविधौ कृपणः कृपोऽयम् ।

हस्ताग्रसक्त मपि यस्य रणाङ्गणेषु
चापं द्विषां भवति निष्कृप मेव चित्रम् ॥ ४९

सारथिः — (रथ मन्यतो नयन्) इतश्च,

एष प्रभुः प्रभवतां कुरुपाण्डवानां
भूरिश्रवाः श्रवणहारिगुणाभिरामः ।
यत्कल्पितैः क्रतुषु यूपशतै रुदग्रै-
र्जातप्ररोह इव भाति चिराय धर्मः ॥ ५०

रथी — (सानन्दम्)

अय मपि वृषसेनः कर्णजः कर्णभाग-
प्रसृतनयनपद्मः सद्मभूतो गुणानाम् ।
इह जगति यदीया वर्तते चापकीर्ति-
स्समरभवि जितानां विद्विषां चाऽपकीर्तिः ॥ ५१

इतोऽप्यय मुद्दण्डपुण्डरीकच्छत्रच्छायानिषण्णो धार्तराष्ट्र स्समरसरोवर मलङ्करोति ।

प्रत्यादेशो धनबलवतां प्राज्यसाम्राज्यसम्प-
ल्लीलागारं कुरुकुलयशश्श्रीलतामूलकन्दः ।
यं प्राप्य श्री र्गतफलभवक्लेशलेशं ध्रुवं ते
वक्षोऽत्याक्षी द्भृगुपदहतिक्लेशितं केशवस्य ॥ ५२

(चिर मवलोक्य सविस्मयम्)

लोकेऽस्मिन् पुरुषस्य पौरुषगुणः कस्यापरस्य स्फुटं
सोन्मेषः परितोषये न्मम मनो दुर्योधनस्याधुना ।
गौरीपूरितवामभागवपुष स्तस्याप्यहो पौरुषं
लोकोत्तीर्ण मपूर्ण मेव मनुते यः पूजितः स्फूर्जितः ॥ ५३

सारथिः — (अन्यतोऽवलोक्य, सहासम्) अहो ! अनेकवीरभटवर्मितोऽय मपूर्ववीरो जयद्रथः ।

रथी — (विलोक्य, सहासम्)

गाम्भीर्यधुर्यमहिमादिगुणै र्गरीयान्
लक्ष्मीं समुद्वहति का मपि सिन्धुराजः ।

यो वाहिनी स्सरभसापतिता स्समन्ता-
दन्त र्दधाति महती रपि भूधराणाम् ॥ ५४

सारथिः — अहो ! निशितशरकरवालजाल प्रतिफलिततरणिकिरण प्रतिहत जननयन मतिचटुलपटहपटुरवचकितपलायित पललग्रासलम्पट जम्बुककुल मलसगलितयातुधाननिकर मविकलचलित कर्णिशरपवनपोप्लूयमान बलरजोनिकर मतिरभसोच्चलितशिञ्जाशिञ्जिनी निर्घोषित तरल तुरग व्याकुल रथकटयावलोडयमान बहुलभटव्यूह मुत्तुङ्गवैजयन्ती सङ्कटस्खलितखेचरसञ्चारं कुरुबल मस्मन्मुखं तिर्यग्वर्तते।

रथी — (विलोक्य) सखे ! सावधानो नियच्छ रथतुरगान्। (देवदत्तं पूरयति)

सारथिः — भ्रान्तोन्मार्गमरुन्ति चञ्चलजलोदन्वन्ति बिम्बस्खल-
त्तिग्मद्युन्ति दलत्कुभृन्ति सपदि त्रस्यत्फणाभृन्ति च ।
क्षोभोद्वेलचलत्सरिन्ति विदलद्रोधोहरिन्ति क्षणात्
क्षुभ्यन्तीव तवाद्भुतै र्जलरुहध्वानै र्जगन्ति स्फुटम् ॥ ५५

रथी — (धनु रास्फालयति)

सारथिः — उन्निद्रद्रुतहरिबाहुसंश्रितश्रि
ब्रह्मास्यप्रसभविलीनभारतीकम् ।
उद्वेगश्लथपुरवैरिवामभागं
संत्रासा द्भुवन मभू द्धनूरवै स्ते ॥ ५६

अपि च,

विस्फारनादरभसक्षुभिताभ्रसिन्धु-
स्रोतोऽन्यतोवहनरिक्तकपर्दबन्धम् ।
मन्ये चिराय मुदिता हृदि निस्सपत्न-
माश्लिष्यतीन्दुशिरसं रसिकाऽद्रिपुत्री ॥ ५७

(ऊर्ध्व मवलोक्य)

अतिविषमसमरालोकनकौतुकानां वैमानिकाना मपि कर्णज्वरं जनय त्येष कलकलः। अतो विमर्दक्षमां भुव मवतराव स्समराय। (इत्युभौ निष्क्रान्तौ)

(ततः प्रविशति वैमानिकं सिद्धमिथुनम्)

तत्रैकः — प्रिये ! प्रवृत्त एव महांत्संरम्भः। तथा हि,

व्यूहाग्रवर्तिन ममुं गुरु माकलय्य
भक्त्या नमस्यति शरै र्निशितै स्सिताश्वः ।
प्रत्यग्रही त्त मथ सोऽपि तथैव बाणै-
रन्यादृशो हि समरे सुभटोपचारः ॥ ५८

स्त्री — अहो कहं कद पथि कद अच्चाउ बाणं बह्म खत्तकुल वडिणं महंतो संरंभो ।

पु — द्रोणार्जुनोर्जितशरव्यतिषङ्गजन्म-
तीव्राग्निधूमकलनाकलुषीकृताक्षम् ।
त्रासस्खलन्मृदुपदं मदजा मवस्था-
मास्थाय ते मुख मिदं मुद मादधाति ॥ ५९

स्त्री — अणुगमिअ देवबूअंगविदावि सुहडाणि हंतुब्ब उब्भुम् । चरन्ति विशिहापुरंत जाळा जहाळा ।

पु — (विलोक्य) हा हा विचित्लेयं शिष्योपाध्यायिका ।

गाण्डीविमुक्तपवनास्त्ररयप्रणुन्न-
व्यावर्तितात्मशरतूर्णविशीर्णगात्रम् ।
सम्प्राद्रवद् द्रुत मसौ विवशीकृतात्मा
लब्धान्तरश्च पृतनां विजयोऽप्यपश्यत् ॥ ६०

स्त्री — जाणे दोणस्स अहिमदो एव्व अज्जुण व्वदेसो अदो वा अव्व बाणं सणवदि करेदि ।

पु — एव मेतत् ।

स्त्री — गंडस्स उपरि पिडउब्भेदो जं अतिक्कंतदोणो अज्जुणो वि नवम्न व्यूहो किवडिदो ।

पु — (सहर्षम्)

तुङ्गध्वजाग्रवसति दधती कपीन्द्र-
मेषा नियामक मिवोन्नतकूबरस्थम् ।
बैभत्सकीरथतरी ह्यधुनातितीर्णा
हार्दिक्यसैन्यजलधि हरिकर्णधारा ॥ ६१

(पुरोऽवलोक्य)

कष्टं भोः कष्टम् । निरन्तरनिस्सरन्ति शितविशिखप्रतीपगामिना श्रुतायुषा निजरथा

ज्झडिति झम्पां सम्पाद्य पतितप्रतोदं दक्षिणभुजे भगवान् पाण्डवसार्थवाह स्ताडितः।

स्त्री – साहु रे महावीर साहु। खत्तिअगोत्तपहवे दिण्णपहारेण कह्णबाहुम्मि सअलखत्त-पहारो तुए किदो णं समासेण। [साधु रे महावीर साधु। क्षत्रियगोत्रप्रभवे दत्तप्रहारेण कृष्णबाहौ सकलक्षत्रप्रहारः त्वया कृतो ननु समासेन।]

पु – (सशिरःकम्पम्)

कामं भटा भुवि भवन्तु पदं स्तुतीना-
मेकः श्रुतायु रिह वीरगणे गणेयः।
येन क्षतं हरिभुजं सहसा जयश्री-
स्त्यक्त्वा ऽधिरोहति तदीय मुरो विशालम्॥ ६२

(सहर्षम्)

वक्त्रान्तरालविचरन्निजनामधेय-
विश्रावितक्षर मुदीर्णजयोन्नतभ्रु।
विस्मेरवीरभटनेत्रनिपेयशोभं
पार्थेन कृत्त मपतच्च शिरो रणेऽस्य॥ ६३

(विलोक्य)

विन्दानुविन्दशरजालतमोनिमग्नं
जिष्णो रथं समभिवीक्ष्य समाकुलस्य।
प्रक्रान्त मश्रु मम शोकवशा न्निपाते
जाते तयो स्त दुपसंहृत माशु हर्षात्॥ ६४

स्त्री – पेक्ख, पेक्ख! दणंजणविणिमुक्कदारुणवारुणत्थ पवाहदंसिदसरोवर विस्समीकरेहिं तुरंगेहिं जाव जदुणंदणो रहं णियोजेदि दाव जुज्जोहणपेसिदं चउव्विहं सेण्णं जुद्धं सण्णद्धं मुहुच्छन्तं वियव्यंति आबलं एकं पदाइं अज्जुणं समन्त परिवारेदि। [पश्य पश्य, धनञ्जयविनिर्मुक्तदारुणवारुणास्त्रप्रवाहदर्शितसरोवर.... तुरङ्गैः यावत् यदुनन्दनो रथं नियोजयति तावत् दुर्योधनप्रेषितं चतुर्विधं सैन्यं युद्धं सन्नद्धं........ एकं पदाति अर्जुनं समन्तात् परिवारयति।]

पु – एकः पदाति रिदानी पार्थ इति मा भैषीः।

राज्यं दुर्नयवत् कुलं खलनृवत् कर्तव्य मालस्यवत्
तत्त्वं दुर्ग्रहवत् धृति व्यसनवत् वित्त वृथात्यागवत्।

सत्काव्यं खलव न्मदं विनयव द्योगं जनासङ्गवत्
सम्यग् ध्वंसयितुं बला द्रिपुबलं पार्थ स्समर्थो रणे ॥ ६५

अपि च,

सर्वतोवार मायोज्य बाणं बाणासनेन सः ।
सर्वतो वारयित्वाऽरीन् न्यवैक्षत पुरो रथम् ॥ ६६

किं भणति नरेन्द्र मिन्द्रतनयः श्रूयताम् ।

पु — आस्थाने ष्वतिबालकै रतिखलैः कर्णादिभि र्वर्णना —
सारैः कौतुकिभिः प्रचारचतुरैःवीरत्व मारोपितः ।
त्यक्त्वा भोगविभूति मद्य सुभटम्मन्यः कि मन्यो यथा
सङ्ग्रामाङ्गणसङ्गतोऽसि नृपते निर्धूतनीतिक्रमः ॥ ६७

स्त्री — किं भणादि कोरओ ? [किं भणति कौरवः ।]

पु — विज्ञातसार मभव त्तव पुत्रकस्य
चापं चिरं विचरत स्समरे ऽभिमन्योः ।
इच्छामि सार मवसातु मनन्यवेद्यं
त्वत्कार्मुकस्य रण मस्मि ततः प्रविष्टः ॥ ६८

शृणु प्रिये, प्रतिभणति पार्थः ।

एकेन मत्प्रियसुतेन शतं सुतानां
दृष्ट्वा हतं कि मनुशोचसि नार्तचित्तः ।
एकं हतं बहुभि रस्त्रविदां सहस्रैः
दृष्ट्वा प्रमोद मवगच्छसि किं मुधैव ॥ ६९

किं च शृणु —

विज्ञातसारमपि मत्करवर्ति चापं
कस्मा द्विभो कथय विस्मृतवा नसि त्वम् ।
किं नागतोऽसि सचिवै स्सह घोषयात्रां
संस्कारदार्ढ्य मथवा विनिहन्ति कालः ॥ ७०

स्त्री — सुणु किं भणादि कह्णो । [शृणु किं भणति कृष्णः ।]

पु — सारं कियत् किमपि संप्रति गाण्डिवस्य
को वा ऽवसातु मल मत्र जनो जगत्याम् ।

एकस्तु शम्भुशिरइन्दु रतिप्रहारा-
दद्यापि निस्सृतसुध स्समवैति सारम् ॥ ७१

प्रिये[1] ! किमाह कुरुराजो देवम् ।

बुद्ध्यैव कालयवनं मगधेश्वरं च
निर्जित्य काम मसि मन्त्रिपदाय योग्यः ।
वाङ्मिश्रणं तु कुरुषे यदि वीरगोष्ठ्यां
स्या न्निग्रह स्तव पदान्तरसंक्रमेण ॥ ७२

किमाह पार्थश्च । विदितचैद्यवृत्तान्तः किं महतोऽपभाषसे ।

स्त्री – सुणु किं भणादि कोरओ । [शृणु किं भणति कौरवः]

पु – अल मलीकवचनरचनया । प्रवर्त्यतां शस्त्राशस्त्रि । कि माह स कृष्णः ?

लब्धं येन पुरा बला त्पुररिपो श्शस्त्रं किम प्यद्भुतं
दुस्साधा हि रणे निवातकवचा येनोर्जिता निर्जिताः ।
प्रत्यर्थि ष्वमरेषु खाण्डव मपि स्वाहाकृतं येन च
स्वस्थ श्शस्त्रकथां कथं नु कुरुषे तेनाद्य दुर्योधन ॥ ७३

अथवा आचार्यप्रसादीकृतमेव मन्त्रकवचं शस्त्रं कारयति ।

स्त्री – (विभाव्य) किं अणक्खरमेव्व जुज्झप्पउत्तो कोरओ । [किं अनक्षरमेव युद्धप्रवृत्तः कौरवः ।]

पु – अमी कुरुपते र्बाणाः क्षणा त्पार्थेन खण्डिताः ।
प्रतिकूलेन दैवेन जनस्येव मनोरथाः ॥ ७४

एते च,

कवचं कुरुराजस्य प्राप्य बाणाः किरीटिनः ।
भङ्गुरत्वं गताः पश्य खलं प्राप्येव सद्गुणाः ॥ ७५

(सविस्मयं च[2])

वर्माऽस्य संगरभिदेलिमबाणजालं
भेत्तु च तेन समधायि समन्त्र मस्त्रम् ।

---

1. अये (A);
2. (B, C)

दूरेण लक्ष्यभिदुरेण शिलीमुखेन
द्रोणस्य सूनु रभिनच्च हिताय राज्ञः ॥ ७६

स्त्री — अच्चरिअं अस्सत्थामधणुविण्णाणं सामिबत्ती अ ।
[आश्चर्यं अश्वत्थामधनुर्विज्ञानं स्वामिभक्तिश्च]

पु — (सामर्षहासम्)

भग्ने मनोरथ इवास्त्रवरे ऽर्जुनेन
दीनेक्षणं क्षण मथाच्युतवीक्षितेन ।
विद्धोऽतिमर्मसु शरै स्सकलाङ्गकेषु
दोधूयमानफणिकेतु रपैति दूरम् ॥ ७७

स्त्री — एसो वि दुस्सासणो इदो वट्टइ ।
[एषोऽपि दुश्शासनः इतो वर्तते ।]

पु — प्रिये ! किं भण त्येन मर्जुनः । रे रे कुरुवीर !

कृष्णाकचग्रहणपातकिनं भवन्नं
नैव स्पृशन्ति विशिखा मम तिष्ठ तावत् ।
दण्डं पुन र्मम गुरु स्त्वयि पातयिष्य-
त्युद्यद्गदापरिघपाणिरुपेत्य भीमः ॥ ७८

स्त्री — एसो किं भणादि । [एष किं भणति]

पु — सञ्जाताः स्थ यतः कुतोऽपि गहने ताते प्रमीते पुरा
बाल्ये जातुकगेहदाहगरलप्रायै र्भयै रर्दिताः ।
तारुण्येऽपि वनं प्रविश्य विषमै श्शाकाशनै रर्दिताः
क्षन्तव्याः परुषोक्तयः तदिह व श्शोच्या हि किं नालपन् ॥ ७९

प्रिये ! श्रूयतां पार्थालापः ।

अहो महानुभावस्य कुरुराजानुजन्मनः ।
यादृशं सदसि क्रौर्यं तादृशं दुष्षमं रणे ॥ ८०

स्त्री — हंत जयद्दहविलम्वो अअं चापकोसलं दंसेदि ।
[हन्त जयद्रथविलम्बः अयं चापकौशलं दर्शयति ।]

पु — (सहासं) पश्य ! पश्य !!

सावज्ञपार्थशरकृत्तरथास्त्रवर्मा
राजानुजो विमुखितो मिषतां बलानाम् ।
शृङ्गायमाणविनिखातशरद्वयेन
मूर्ध्ना रणा त्पशु रिवातिरयात् पपात ॥ ८१

(अन्यतोऽवलोक्य) इतोऽप्यय मभिभूतभोमो भीमकर्मा दोर्मदविस्फारितकालपृष्ठः पार्थेनाहूयमानः कि माह कर्णः ?

आध्मायमानवपुषो ऽतिमदामयेन
स्वास्थ्याय ते भिषगिवैष समागतोऽस्मि ।
मां भीमसेनविकटीकरणेन सम्यक्
सिद्धप्रयोग मवगच्छ सुरेन्द्रसूनो ॥ ८२

स्त्री — किं भणादि अज्जुणो ? [किं भणति अर्जुनः ।]

हन्त गत्वा ऽभ्यमित्रीणं मा मन्तरान्तरा प्रतिबध्नन्ति विरोधिनः। (कर्णं प्रति) तिष्ठ तावत् ।

इमं गाण्डीवकोदण्डगुणमेव न केवलम् ।
कर्ण, कर्णान्तविश्रान्तं पार्थम प्यवधारय ॥ ८३

जयद्रथवधानन्तरं संभावयामि ।

पु — प्रिये ! शृणु कि माह कर्णः ? त्वरयति मां भवत्पौरुषजिज्ञासा । (विभाव्य) कि माह पार्थः ?

गन्धर्वेन्द्रजये पलायितवता मा नाम वेदि त्वया
मा वा गोग्रहणे रणश्रमवशा न्निद्राभिभूतात्मना ।
नाज्ञासी र्यदि मत्स्ययन्त्रदलने मत्पौरुषं भोः कथं
जानास्येव तथा कुतोऽप्यथ परिज्ञातं न तत्रापि तत् ॥ ८४

(विलोक्य च)

मानाभिरक्षणविधा वतियत्नभाजो-
र्हेता वसिद्ध मभिलाषुकयो र्जयाय ।
अन्योन्यविग्रहवतो श्छलकाङ्क्षिणोश्च
जल्पोपमः कलि रभू द्रविशक्रसून्वोः ॥ ८५

अपि च,

आवृण्वतो दिनकरस्य करप्रचारं
जिष्णो श्शरा न्निजशरै रविसूनु राच्छंत् ।
अभ्रङ्कषानपि शरान् रविजस्य पार्थः
सर्व स्सुतः पितृधने विहितप्रतिज्ञ. ॥ ८६

हि हिं भो ! [ही ही भोः]

आकर्णान्तं विकृष्यास्त्रं कर्णान्तायार्जुनेरितम् ।
वह न्दुर्योधनस्यार्त्या बाणेन द्रौणि रच्छिनत् ॥ ८७

आचिताङ्ग श्शरै र्जिष्णोः कनकद्रवकद्रुभिः ।
अनुकुर्वन् सहस्रांशो रस्य सूनुरपासरत् ॥ ८८

स्त्री — समराहिमुहं विससेणं किं भणादि अज्जुणो ?
[समराभिमुखं वृषसेनं किं भणति अर्जुनः]

पु — रविकरनिशिता श्शरा मदीयाः
कुमुद इव त्वयि पोतना[1] विशन्ति ।
अपसर वृषसेन कर्णभङ्ग-
स्तव युवते रिव केवलं विकारः ॥ ८९

स्त्री — अअं वि किं भणादि ? [अय मपि किं भणति]

पु — यथा मम पिता भीम मग्रण्यं तेऽजय द्रणे ।
तथा त्वामपि जेष्यामि किं वृथैव विकत्थनैः ॥ ९०

हन्त भोः,

किं शुकोऽय मिति ज्ञातो योऽलप न्मधुराक्षरम् ।
किंशुकोऽय मिति ज्ञातः स क्षणा दर्जुनक्षतः ॥ ९१

अहह !

बाणाभिघातदलिते मुकुटेऽतिभीत
स्संप्राद्रव ल्लघुतया च्युतमूर्धशंकी ।

1. This word does not have any meaning here.

दृष्ट्वाऽभिमन्युसदृशीं कचबन्धमुद्रां
प्रेम्णाऽर्जुनोऽपि न शरै रलुना च्छिरोऽस्य ॥　　९२

(निरूप्य च) हन्त ! निजप्रतिज्ञासमयातिपातभीतोऽय मतित्वरते ऽर्जुनः । य एषः —

सप्रग्रहप्रवयणौ दलय न्निषुभ्यां
यन्तुः करौ समभिपूरितदेवदत्तः ।
निर्घोषभीषितचलद्रयवाजिराजि-
व्यावर्तितं कृप मपास्य दपास्थयैव ॥　　९३

अयम प्यन्तरा वर्तते । किमाह गुरुपुत्रः ।

शश्वत्खाण्डवदावदाहनचलद्वैश्वानराश्वासनं
विस्फूर्जन्निजदर्पतर्पितहरप्रासास्त्रदीप्तत्विषम् ।
शक्राभिक्रमकुन्निवातकवचश्वासानिलोद्वासनं
पार्थ त्वां कलयन् सतथ्य मधुना नन्दा म्यमन्दोत्सवः ॥　　९४

त द्गृहाण समरोचित मातिथेयम् ।

स्त्री — किं भणादि अज्जुणो ? [किं भणति अर्जुनः] (संस्कृत माश्रित्य) क्रियते ब्राह्मणस्य प्रार्थना, विशेषतो गुरुपुत्रस्य ।

पु — प्रिये ! पश्य ! पश्य !!

आपक्षमग्नतनुभि स्समरप्रवीण-
द्रौणायनिप्रहितबाणशतै श्चिताङ्गः ।
उड्डीय सैन्धव मतित्वरया निहन्तु-
माविष्कृतप्रततपक्ष इवैष भाति ॥　　९५

कुन्तीसुतेन च धनुर्बलशालिनोऽस्य
वक्षःस्थले शितमुखो विशिखो निखातः ।
यो दृश्यते विततवीररसावसेका-
ज्जातः प्ररोह इव हृद्गतपौरुषस्य ॥　　९६

(विभाव्य) हाहा शरोत्खननवेदनामूर्छित स्सारथिना ऽपवाहितो गुरुपुत्रः ।

स्त्री — कहं रणमण्डले ण दीसदि भूरिस्सवसो ।
[कथं रणमण्डले न दृश्यते भूरिश्रवाः]

पु — किं न जानासि । प्रागेवाऽऽस्ते ।

निर्जित्य सात्यकि मवक्रपराक्रमेण
येनोर्जितां युधि जयश्रिय माप्तु मैच्छत् ।
तस्मिन् भुजे विजयबाणमुखावकृत्ते
योगा दगा त्पुन रसा वपवर्गमार्गम् ॥ ९७

(विलोक्य च) कुतः । पश्य ।

अज्ञानभुक्तकुलदूषककौरवान्न-
प्रादुष्कृतं किमपि दुष्कृत मादधानः ।
मन्येऽह मद्य सितवाहनशस्त्रपातात्
पूतो भवेय मिति योद्धु मुपैति शल्यः ॥ ९८

(विलोक्य च) आश्चर्यम् ! आश्चर्यम् !!

स्वस्रीयमातुलशरव्यतिषङ्गजेन
ज्वालाकुलेन नभसि ज्वलताऽनलेन ।
मन्ये पुनः त्रिपुरदाहकृतभ्रमाणां
सांराविणं दिविषदां भयतः प्रवृत्तम् ॥ ९९

(सहर्षं च)

शल्ये रणा दपक्रान्ते बाणवर्षात् किरीटिनः ।
सशल्यापि विशल्याऽभू त्कुरुराजन्यवाहिनी ॥ १००

स्त्री — सण्णिहिदो दाणिं जयद्दहो । [सन्निहित इदानीं जयद्रथः ।]

पु — अत एवार्जुन स्संकुलयुद्ध मुभयहस्ति प्रवर्तयति ।

विच्छिन्नप्रचुराङ्गरागपरुषा विस्पष्टदष्टाधरा-
श्शस्त्रध्वस्तविलीनमौलिरचना भूरिव्रणालङ्कृताः ।
एते ते विषमास्त्रसंगतपरिश्रान्ता स्समन्ता श्चिरं
संश्लिष्य क्षितिं मात्मनः प्रणयिनीं पृथ्वीधरा श्शेरते ॥ १०१

प्रिये ! इतोऽवलोकय ।

यतः करोति गाण्डीवजीवाकर्षण मर्जुनः ।
ततः करोति जन्तूनां जीवाकर्षण मन्तकः ॥ १०२

स्त्री — अह्महे उट्ठितभूयिट्ठकबन्धदंसणेणत्ति मे अज्जवि सउलसेणा वाणिवाद पच्चओ ।

पु — आश्चर्यम्, आश्चर्यम्,

कर्माभिधाननवतूलिकया चिराय
लेखेन भूमिफलके लिखितं विचित्रम् ।
पार्थच्छलो जलधरो विशिखाम्बुवर्षी-
निर्मृष्टवान् सपदि कौरवसैन्यचित्रम् ॥ १०३

स्त्री — (संस्कृत माश्रित्य)

शोकाभितप्तहृदयज्वरशान्तिहेतो-
रक्षौहिणी स्सपदि सप्त निजास्त्रवह्नौ ।
आहुत्य शङ्खरवमन्त्रमुखो विधातुं
पूर्णाहुति प्रति कुरो र्दयितं प्रवृत्तः ॥ १०४

पु — अयमपि दुश्शलाकुचकुम्भकाठिन्यसाक्षिकण्ठभूषणं मणिहारं दरहासविलासभावितै र्दशनमयूखै र्मांसलयन् विमलचामरग्राहिणीकटाक्षप्रभाभासुरमुखकमलद्युति रनादरविलोकितपार्थ स्सलीलं धनु रास्फालयन् वातरयेण प्रवृत्तः ॥

कि माह जयद्रथः ?

अपार्थदोर्विक्रम पार्थ तूर्णं
रणा न्निवर्तस्व निवृत्तकामः ।
विलोक्य मां मत्प्रतिरोधिनो हि
न तेऽभिमन्यो रिव बालभावः ॥ १०५

पार्थश्च सोपहासं कि माह ?

यत्नेऽभिमन्यु रपराङ्मुख एव शस्त्रै-
र्युद्धे हतः परिभवः क इवास्ति तत्र ।
न त्वं यथा विशिखमुण्डितमुण्डपिण्डो
युद्धे द्विषद्भि रभिभूय विमोचितोऽसौ ॥ १०६

अपि च,

वने पतिवियुक्तां[1] स्त्रीं निर्जने परिमुष्णता ।
अलङ्केशश्रिया पुत्र भवता रावणायितम् ॥ १०७

किं च रे मूर्ख !

य स्त्वाञ्चालीहरणविधिना सापराधोऽपि पूर्वं
तत्रास्माभि र्ननु विरचितं मुण्डनं दण्डनं ते ।
य न्मे बालं विदय मवधी स्तत्र दण्डं विधातुं
विद्धि प्राप्तं ज्वलितबलभित्खाण्डवं पाण्डवं माम् ॥ १०८

तद् गृहीतास्त्रोऽस्मि ; तिष्ठ तावत् !

स्त्री — किं भणिदं जयद्दहेण ? [किं भणितं जयद्रथेन ।]

पु — स्त्रीत्वं तव परिज्ञाय विराटस्य पुरे पुरा ।
अस्त्री त्वमिति मे बुद्धि र्गृहीतास्त्रेऽपि न त्वयि ॥ १०९

(पुरोऽवलोक्य) अहह !

पार्थस्य दक्षिणभुजे भुजगेन्द्रसारे
क्रुद्धेन सिन्धुपतिना विशिखो निखातः ।
स्तम्भोऽधिरोपित इव प्रकटं जयश्री-
लीलाविलासरचनाविधये विभाति ॥ ११०

स्त्री — (संस्कृत माश्रित्य)

पार्थप्रमुक्तशरपातविशीर्णबिम्ब-
स्सद्य स्समुत्पतितमौलिमणिच्छलेन ।
मन्येऽद्य सिन्धुनृपतिः त्रिदिवं प्रयास्यन्
गम्यां दिशं प्रति विनिर्गमनं करोति ॥ १११

(सहर्षम्)

भित्त्वा शरै ररिशरा नचिरांशुपातैः
पश्यार्जुन स्सपदि सिन्धुकुलोद्भवस्य ।
केतुस्थितं रिपुमनोभयदं वराह-
चित्रस्थितं मदमपि प्रसभं निरास्थत् ॥ ११२

1. ०विमुक्तां (A)

इतश्च,

प्रादुष्करोति दहनास्त्रमपि स्फुलिङ्ग-
सङ्गज्वलद्विकटकेतुपटं किरीटी ।
यद्धूमकज्जलकलङ्कितसूर्यबिम्बं
ज्वालावलीक्वथितपेलवनाकसिन्धु ॥ ११३

पु — प्रिये ! प्रशान्तमेव आग्नेयमस्त्रं य दमोघ मिदं मेघंकर मस्त्रं प्रवर्तते सिन्धुराजस्य ।

स्त्रीं — (संस्कृत माश्रित्य) अत एव तद्विवृद्धयै वर्षति पर मासु वाहिनीष्वेव ।

पु — एते हि पश्य सखि तन्वि करालभासो
विद्युन्मिषेण जनदृष्टिमुषो वमन्तः ।
क्वाग्निः कुतोऽग्नि रिति नून मनूनगत्या
गर्ज न्त्यमी जलधरा जल मुत्सृजन्तः ॥ ११४

(विलोक्य) नूनं, अय मर्जुनो नागास्त्र मनुध्यायति । यतः,

कामं स्वभावकुटिलै स्सततं मुखेन
मर्माविधं च विषमं विष मुत्सृजद्भिः ।
द्वेधाप्रवृत्तरसनै भुवनं भुजङ्गैः
दुस्संचरं नृपकुलं पिशुनै रिवास्ते ॥ ११५

अपि च,

दृश्यन्ते करिणां कटे मदपयोधारानुकारस्पृशो
नीलीचेलरुचो ध्वजे ष्वथ रथव्राते पतत्त्विषः ।
वाहानां वदनेषु लोलविलसद्वल्गावलीवल्गिता
वीराणां हरिनीलहाररुचयः कण्ठेषु कालोरगाः ॥ ११६

स्त्री — (संस्कृत माश्रित्य) हन्त भोः !

ध्याते समाहितधियाऽथ जयद्रथेन
भूरिप्रभावविभवे गरुडास्त्रमन्त्रे ।
क्वापि प्रलीन मतिभीतिकरै र्भुजङ्गैः
मृत्युञ्जये शिव इवान्तकपाशजालैः ॥ ११७

पु — अयमपि शार्वर मस्त्र मनुध्यायति पार्थः ।

एत त्तर्कय सर्वतोऽखिलजगद्भेदापलापक्षमे
नेत्रान्धंकरणे समुद्यति तमस्स्तोमे तमालत्विषि ।
आकीर्णं नु समन्ततो मृगमदैः पूर्णं नु चूर्णाञ्जनै-
रास्तीर्ण न्वथ वेन्द्रनीलशकलै स्तारापथाभ्यन्तरम् ॥ ११८

अहह !

निम्नोन्नतस्थिरचलाचलमेचकादि
नानापदार्थविषयः कुत एव भेदः ।
अर्थक्रियातिविरहा न्नयनेन्द्रियस्य
सद्भावमप्यपलपन्ति यदा तमांसि ॥ ११९

स्त्री — (संस्कृत माश्रित्य)

प्रादुष्करोति पतिर प्यथ दुश्शलाया-
स्त द्भानवीय मुदितांशुसहस्र मस्त्रम् ।
यस्य प्रभावविभवा त्परमार्थबोधा-
दज्ञानव त्तिमिर मस्तमितं समस्तम् ॥ १२०

(नेपथ्ये)

भो भो महावीर ! अलं संभ्रमेण । अय मुत्तरोत्तरेण कर्मणा धनञ्जयम प्यतिशेते जयद्रथः । दिवसश्च परिणतप्रायः । ततः प्रतिज्ञातिपाता दर्जुनः स्वयमेव विनङ्क्ष्यति ।

पु — कथ मत्याहितं जातम् ! (ऊर्ध्व मवलोक्य सविस्मयम्)

जातत्वरः परिगतोऽस्तगिरिं प्रयातु
जिष्णो र्जयद्रथवधे न विलोक्य कर्म ।
सत्या तथा सति भवे द्विजयप्रतिज्ञा
स्यातां दृशौ च सफले तव तिग्मरश्मे ॥ १२१

प्रिये,

शृणु श्रुतजनालापश्च किं माह पार्थः । प्रतिज्ञा ममेदानी मस्त्रविद्याचातुर्यचर्या-विनोदः । तत् सखे अनुजानीहि, ब्राह्म मस्त्र माविर्भावयामि ।

प्रिये, शृणु किं माह कृष्णः ।

यः पातये दस्य शिरः पृथिव्यां
पते च्छिर स्तस्य वरं विजानन् ।

तपस्यत स्तत्पितु रङ्क एव
निपातये त्त त्स निरस्यनूर्व्याम् ॥ १२२

स्त्री — (संस्कृत माश्रित्य) श्रुतकृष्णवचनश्चाऽयं धनु रास्फालयन् सावष्टम्भं कि माह पार्थः ?

सर्वे सुरासुरवरोरगकिंनराद्या
स्त्रायध्व मेन मिह वो यदि शक्तिर स्ति ।
छित्त्वा[1] शिरोऽस्य समरे विशिखै रुदस्यन्
राहो स्सपत्न मपरं दिवि दर्शयामि ॥ १२३

(सहर्षाद्भुतं च)

तद्भूभुवस्वरभयङ्कर मुन्मयूखं
ब्राह्मं महास्त्र मवधाय धनञ्जयोऽयम् ।
त द्दशलादशनचिह्नपवित्रितोष्ठं
छित्त्वा शिरोऽस्य पितु रङ्कतले निरास्थत् ॥ १२४

अयं च पाञ्चजन्यं धमति कृष्णः ।

पु — प्रतिज्ञानिर्वाहप्रमुदितमति श्शङ्खनिनदैः
न चेद् ब्रह्माण्डस्य स्फुटन मकरिष्य द्यदुपतिः ।
अपर्याप्तस्थानस्थितिकृतपरिक्लेशरहिता
सदा कीर्ति जिष्णोः चिरतर मुदैष्य त्कथ मिह ॥ १२५

जयद्रथवधविलोकनेन कृतार्थचक्षुषौ स्वः । त द्विमुञ्चावो जितकाशिनो रूपरि पुष्पवर्षं कृष्णार्जुनयोः ।

(इति निष्क्रान्तौ)

(ततः प्रविशतः कृष्णार्जुनौ)

कृष्णः — पश्य ! पश्य !!

तद्विजयमुदितशतमख-
नयनव्रातोत्थबाष्पजलवृष्टिः ।
अभिषिञ्चति तव मौलिं
त्रिपुरहरस्येव सुरसिन्धुः ॥ १२६

---

1. भित्त्वा (A)

दिष्ट्या वर्धसे। जयद्रथान्तःपुरिकाविलापकोलाहलानुकारिणा भवत्कटकप्रवृत्त जयकाहलनिनादेन।

रथी – त्वत्प्रसादाविर्भाव एवायम्।

त्वत्कृपाया ममित्रारे स्थितायां यदुपुङ्गव।
किय देत त्प्रतिज्ञेति भवाब्धि रपि गोष्पदम्॥ १२७

सारथिः – किं बहुनोक्तेन!

प्रकामदुर्गमे मार्गे तत्र तत्र स्खलद्गतिः।
मया सारथ्य मास्थाय नीतोऽयं त्वन्मनोरथः॥ १२८

ततश्च किं ते भूयः प्रिय मुपकरोमि।

रथी – कि मतः परं प्रिय मस्ति। तथाऽप्येत द्भवतु।

अविहतविभवं कवीश्वराणां
स्फुरतु यश श्चिर मिन्दुकुन्दगौरम्।
हरिहरचरणेषु भक्तियुक्तो
भवतु जनो भुवि भुक्तिमुक्तिसिद्धः॥ १२९

(इति निष्क्रान्ता स्सर्वे)

**॥ इति श्रीमदार्यसूर्यकविना विरचितो**
**विजयविक्रमो नाम व्यायोगः॥**

# ग्रन्थस्थश्लोकानां सूची

# PUBLICATIONS OF
# S.V. UNIVERSITY ORIENTAL RESEARCH INSTITUTE
## TIRUPATI

| | | | |
|---|---|---|---|
| 1. Gajagrahaṇaprakāra of Nārāyaṇa Dīkṣita<br>Edited with Introduction by<br>Prof. E.R. Sreekrishna Sarma, M.A., Ph.D. | 1968 | Rs. | 2-50 |
| 2. Apāṇinīyaprāmāṇyasādhanam of Nārāyaṇa Bhaṭṭapāda<br>Edited with Introduction, English Translation and Notes by<br>Prof. E. R. Sreekrishna Sarma, M.A., Ph.D. | 1968 | Rs. | 0-75 |
| 3. Kāvyāmṛtam of Śrīvatsalāñchana<br>Edited with Introduction by<br>Dr. K.S. Ramamurti, M.A., Ph.D. | 1971 | Rs. | 3-25 |
| 4. Kamalāvilāsabhāṇa of Nārāyaṇakavi<br>Edited with Introduction by<br>Dr. K. S. Ramamurti, M.A., Ph.D. | 1971 | Rs. | 0-50 |
| 5. Vijayavikramavyāyoga of Āryasūrya<br>Edited with Introduction by<br>Dr. K. S. Ramamurti, M.A., Ph.D. | 1972 | | Price to be fixed |
| 6. S. V. University Oriental Journal, Vol. I of 1958 to Vol. XIII of 1970 – Parts 1 & 2 cobmined. Each volume at | | Rs. | 10-00 |
| 7. S. V. University Oriental Journal Vol. XIV of 1971 (Parts 1 & 2 printed separately) | | Rs. | 15-00 |
| 8. An Alphabetical Index of Sanskrit, Telugu and Tamil Manuscripts (Palm-leaf and Paper) in the Sri Venkateswara University Oriental Research Institute Library, Tirupati | 1956 | Rs. | 10-00 |

## UNDER PRINT

9. Pradyumnacaritramu (Telugu) of Muppirāla Subbarāyakavi
   Edited with Introduction and Notes by
   Prof. J. Chenna Reddy, M.A., Ph.D.

10. Kṛṣṇavilāsa (a Kāvya in 11 cantos) of Puṇyakoṭi with Vyākhyāna
    Edited with Introduction by
    Dr. K. S. Ramamurti, M.A., Ph.D.

For Copies:
Registrar,
S. V. University,
TIRUPATI (A.P.).